# श्री दत्त स्तोत्र

श्री गणेशाय नमः । श्री सरस्वत्यै नमः ।
श्रीपादवल्लभ–नृसिंह सरस्वती – श्री गुरु दत्तात्रेयाय नमः

दत्तात्रेयं महात्मानं वरदं भक्तवत्सलम् ।
प्रपन्नार्तिहरं वंदे स्मर्तगामि सनोऽवतु ॥

दीन बंधुं कृपासिंधुं सर्वकारण कारणम् ।
सर्वरक्षाकरं वंदे स्मर्तगामीम् ॥

शरणागत दीनार्त परित्राण परायणम् ।
नारायणं विभुं वंदे स्मर्तगामीम् ॥

सर्वानर्थहरं देवं सर्वमंगल मंगलम् ।
सर्वक्लेश हरं वंदे स्मर्तगामीम् ॥

ब्रह्मण्यं धर्म तत्त्वज्ञं भक्त कीर्तिविवर्धनम् ।
भक्ताभीष्टप्रदं वंदे स्मर्तगामीम् ॥

शोषणं पापपंकस्य दीपनं ज्ञानतेजसः ।
ताप प्रशमनं वंदे स्मर्तगामीम् ॥

सर्वरोग प्रशमनं सर्वपीडा निवारणम् ।
विपदुद्धरणं वंदे स्मर्तगामीम् ॥

जन्म संसारबंधघ्नं स्वरूपानंददायकम् ।
निश्श्रेयसपदं वंदे स्मर्तगामीम् ॥

जयलाभयशः काम–दातुर्दत्तस्ययः स्तुवम् ।
भोग मोक्ष प्रदस्येमं प्रकटेत् सुकृती भवेत् ॥

॥ इति श्रीमद् वासुदेवानंद सरस्वती कृत
"जयलाभादीकरं श्री दत्त स्तोत्रं" संपूर्णम् ॥